# यन्त्रोद्धारकहनुमत्स्तोत्रम्



श्रीसत्यात्मतीर्थविरचितप्रमोदतोषिणीव्याख्यायुतम्

प्रकाशनम् : विश्वमध्वमहापरिषत् बेंगळूरु - ४

विश्वमध्वमहापरिषत् ग्रन्थमाला – 153

श्रीव्यासतीर्थविरचितम्

# यन्त्रोद्धारकहनुमत्स्तोत्रम्

श्रीसत्यात्मतीर्थविरचितप्रमोदतोषिणीव्याख्यायुतम्

ಕನ್ನಡ ಅನುವಾದ

ಪಂ. ವಾದಿರಾಜಾಚಾರ್ಯ ಕರಣಂ



प्रकाशनम्

जगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थानम्

उत्तरादिमठः

विश्वमध्वमहापरिषत् बेंगळूरु – ४

**Yantrodharaka Stotram of Shri Vyasateertha, with 'Pramoda Toshini' Sanskrit Commentary by Sri Satyatmateertha Swamiji.**

**Editing and Kannada translation - Pt. Vadirajacharya Karanam**

**Published by - Vishwa Madhwa Mahaparishat**

Copies : 1000

**First Edition : November 2015**

No.of Pages : **142**



**Price : 50.00**

Copies can be had from :

**Vishva Madhwa Maha Parishat**
#11 2nd Floor Uttaradimath Building.
UttaradiMath Road, Shankarpuram,
Basavanagudi BANGALORE - 4
Phone : 080 26603692. vmmp05@gmail.com

ಅಕ್ಷರ ಜೋಡಣೆ : ವಿಶ್ವಮಧ್ವಮಹಾಪರಿಷತ್ ಸಂಶೋಧನ ವಿಭಾಗ

ಮುಖಪುಟವಿನ್ಯಾಸ : ಶೇಷಗಿರಿ ಕೆ.ಎಮ್
ಗೋಪಾಲಕೃಷ್ಣ ದಾವಣಗೇರಿ

**Printed by : VAGARTHA BANGALORE -19 PHONE : 22427677**



ಶ್ರೀಮಜ್ಜಗದ್ಗುರುಮಧ್ವಾಚಾರ್ಯಮೂಲಮಹಾಸಂಸ್ಥಾನ
ಶ್ರೀಮದುತ್ತರಾದಿಮಠಾಧೀಶರಾದ, ಶ್ರೀ 1008 ಶ್ರೀಸತ್ಯಪ್ರಮೋದತೀರ್ಥ
ಶ್ರೀಪಾದಂಗಳವರ ಅಡಿದಾವರೆಗಳಲ್ಲಿ ಭಕ್ತಿಪೂರ್ವಕ ಸಮರ್ಪಣೆ

# ಪ್ರಕಾಶಕರ ನುಡಿ

ಶ್ರೀ ೧೦೦೮ ಶ್ರೀ ಸತ್ಯಪ್ರಮೋದತೀರ್ಥಶ್ರೀಪಾದಂಗಳವರ ಮಹದಪೇಕ್ಷೆಯಂತೆ ಪ್ರಾಚೀನಗ್ರಂಥಗಳ ಸಂರಕ್ಷಣೆ ಹಾಗೂ ಅವುಗಳ ಸಂಶೋಧನ, ಪ್ರಕಾಶನ ಮೊದಲಾದ ಅನೇಕ ಉನ್ನತಮಟ್ಟದ ಉದ್ದೇಶಗಳಿಂದ ಶ್ರೀ ೧೦೦೮ ಶ್ರೀ ಸತ್ಯಾತ್ಮತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳವರಿಂದ ಸಂಸ್ಥಾಪಿತವಾದ ಸಂಸ್ಥೆ "**ವಿಶ್ವಮಧ್ವಮಹಾಪರಿಷತ್**"

ನಮ್ಮ ಸಂಸ್ಥೆಯು ಪ್ರಾಚೀನವಾದ, ಅಪ್ರಕಟಿತವಾದ ಗ್ರಂಥಗಳನ್ನು ವಿದ್ವಾಂಸರಿಂದ ಸಂಶೋಧನೆ ಮಾಡಿಸಿ ಅವುಗಳನ್ನು ಪ್ರಕಾಶಿಸುವ ಮಹತ್ತರ ಧ್ಯೇಯವನ್ನು ಹೊಂದಿದೆ. ಈ ದೃಷ್ಟಿಯಲ್ಲಿ ವಿದ್ವಾಂಸರಿಗೆ, ವಿದ್ಯಾರ್ಥಿಗಳಿಗೆ ಉಪಯುಕ್ತವಾದ ಅನೇಕ ಮಹತ್ವದ ಗ್ರಂಥಗಳನ್ನು ಅನೇಕ ಟೀಕಾ-ಟಿಪ್ಪಣಿಗಳೊಂದಿಗೆ ಪ್ರಕಾಶಿಸಿದೆ. ಇದಲ್ಲದೇ ಜನರಲ್ಲಿ ಧರ್ಮಜಾಗೃತಿಗಾಗಿ ಪ್ರಶ್ನೋತ್ತರರೂಪದಲ್ಲಿ ಹಾಗೂ ಪ್ರವಚನರೂಪದಲ್ಲಿ ಅನೇಕ ಉಪಯುಕ್ತ ಪುಸ್ತಕಗಳನ್ನು ಈಗಾಗಲೇ ಹೊರತರಲಾಗಿದೆ. ಸಂಸ್ಕೃತ-ಕನ್ನಡ-ತೆಲುಗು- ತಮಿಳು ಹಾಗೂ ಆಂಗ್ಲ ಮೊದಲಾದ ಭಾಷೆಗಳಲ್ಲಿ ಸಂಸ್ಥೆಯಿಂದ ಅನೇಕ ಗ್ರಂಥಗಳು ಪ್ರಕಾಶಿತವಾಗಿವೆ.

ಪ್ರಕೃತ ಶ್ರೀವ್ಯಾಸರಾಜರಿಂದ ರಚಿತವಾದ **ಯಂತ್ರೋದ್ಧಾರಕ ಪ್ರಾಣದೇವರ ಸ್ತೋತ್ರಕ್ಕೆ** ಪರಮಪೂಜ್ಯ ಶ್ರೀ ಶ್ರೀಸತ್ಯಾತ್ಮತೀರ್ಥರು ವಿದ್ವತ್ತೋಷಿಣಿಯಾದ **ಪ್ರಮೋದತೋಷಿಣೀ** ಎಂಬ ವ್ಯಾಖ್ಯಾನವನ್ನು ರಚಿಸಿದ್ದಾರೆ. ತಮ್ಮ ಅದ್ಭುತವಾದ ಪ್ರತಿಭೆಯಿಂದ ಈ ಸ್ತೋತ್ರಕ್ಕೆ ಅನೇಕ ಅರ್ಥಗಳನ್ನು ತುಂಬಾ ಸೊಗಸಾಗಿ ತಿಳಿಸಿಕೊಟ್ಟಿದ್ದಾರೆ. ಇದು ಪಾಂಡಿತ್ಯದ ಪ್ರದರ್ಶನಕ್ಕಾಗಿ ಅಲ್ಲ. ಭಕ್ತಿ ಅನುಸಂಧಾನಗಳ ದಿಗ್ದರ್ಶನಕ್ಕಾಗಿ ಎಂದು ಅರಿಯಬೇಕು. ಈ ಸ್ತೋತ್ರವನ್ನು ಪಾರಾಯಣ ಮಾಡುವ ಸಾಧಕನು ಅನುಸಂಧಾನ ಮಾಡುವುದಕ್ಕೆ ಹೊಸ ಹೊಸ ಆಯಾಮಗಳನ್ನು ತೋರಿಸಿಕೊಟ್ಟಿದ್ದಾರೆ.

ಇಂತಹ ಒಂದು ಕೃತಿಯನ್ನು ಪ್ರಕಾಶನ ಮಾಡುತ್ತಿರುವುದು ಪರಿಷತ್ತಿಗೆ ಸಂತಸದ ಹಾಗೂ ಹೆಮ್ಮೆಯ ವಿಷಯವಾಗಿದೆ. ಈ ಅವಕಾಶವನ್ನು ನಮ್ಮ ಸಂಸ್ಥೆಗೆ ಕಲ್ಪಿಸಿಕೊಟ್ಟ ಶ್ರೀ ಶ್ರೀಪಾದಂಗಳವರಿಗೆ ಅನಂತ ವಂದನೆಗಳು.

ಶ್ರೀಗಳವರ ಆದೇಶದಂತೆ ಈ ಕೃತಿಯನ್ನು ಕನ್ನಡದಲ್ಲಿ ಅನುವಾದ ಮಾಡಿಕೊಟ್ಟ ಪಂ. ವಾದಿರಾಜಾಚಾರ್ಯ ಕರಣಂ ಇವರಿಗೆ, ಸುಂದರವಾಗಿ ಮುದ್ರಣ ಮಾಡಿದ ವಾಗರ್ಥಮುದ್ರಣಾಲಯದವರಿಗೆ ಧನ್ಯವಾದಗಳು.

ಪ್ರಧಾನ ಕಾರ್ಯದರ್ಶಿಗಳು
ವಿಶ್ವಮಧ್ವಮಹಾಪರಿಷತ್ ಉತ್ತರಾದಿಮಠ
ಬಸವನಗುಡಿ ಬೆಂಗಳೂರು - 4



## ಆಶೀರ್ವಚನ

ಶ್ರೀ ವೆಂಕಟರಾವ್ ಸೇಡಂಬಿ ಅವರು ಶ್ರೀಮಠದ ವಿಶೇಷ ಸೇವೆಯನ್ನು ನಿರ್ವ್ಯಾಜವಾಗಿ ಮಾಡುತ್ತಲಿದ್ದಾರೆ. ಇದರಂತೆ ಅವರ ಮಗನಾದ ದಿ || ಗುರುರಾಜ ಸೇಡಂಬಿ ಅತ್ಯಂತ ಉತ್ಸಾಹದಿಂದ ಶ್ರೀಮಠದಿಂದ ನಡೆಯುವ ಅನೇಕ ಸಾಮಾಜಿಕ ಕಾರ್ಯಗಳಲ್ಲಿ ವಿಶೇಷ ನೇತೃತ್ವವನ್ನು ವಹಿಸಿ ಕಾರ್ಯ ನಿರ್ವಹಿಸುತ್ತಿದ್ದನು. ಅವನ ಸ್ಮರಣಾರ್ಥ ಶ್ರೀಮತಿ ಪ್ರಮಿಳಾ, ಶ್ರೀ ವೆಂಕಟರಾವ್ ಸೇಡಂಬಿ ಇವರು ''ಯಂತ್ರೋದ್ಧಾರಕಹನುಮತ್‌ಸ್ತೋತ್ರಂ'' ಎಂಬ ಈ ಹೊತ್ತಿಗೆಯ ಪ್ರಕಾಶನದ ಸಮಗ್ರ ವೆಚ್ಚವನ್ನು ಭರಿಸಿದ್ದಾರೆ. ಈ ಮೂಲಕ ಶ್ರೀವೇದವ್ಯಾಸದೇವರ ಹಾಗೂ ಶ್ರೀಮದಾಚಾರ್ಯರ ಉತ್ತಮಸೇವೆಯನ್ನು ಮಾಡಿದ್ದಾರೆ.

ಇವರಿಗೆ ಹಾಗೂ ಇವರ ಕುಟುಂಬದವರಿಗೆ ಭಗವಂತ ಆಯುರಾರೋಗ್ಯ ಐಶ್ವರ್ಯಗಳನ್ನು ಕೊಟ್ಟು, ಆಚಾರ್ಯರ ಶಾಸ್ತ್ರವನ್ನು ಓದುವ ಸೌಭಾಗ್ಯ- ಆಸಕ್ತಿಯನ್ನು ನೀಡಿ ಅನುಗ್ರಹಿಸಲಿ ಎಂದು ಅಸ್ಮದುಪಾಸ್ಯಮೂರ್ತಿಗಳಾದ ಶ್ರೀಮೂಲರಾಮ- ದಿಗ್ವಿಜಯರಾಮ-ವೇದವ್ಯಾಸದೇವರಲ್ಲಿ ಪ್ರಾರ್ಥಿಸುತ್ತೇವೆ.

ಶ್ರೀ 1008 ಶ್ರೀ ಸತ್ಯಾತ್ಮತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳವರು
ಉತ್ತರಾದಿಮಠ

॥ अथ श्रीव्यासतीर्थविरचितम् ॥

# ॥ यन्त्रोद्धारकहनुमत्सोत्रम् ॥

नमामि दूतं रामस्य सुखदञ्च सुरद्रुमम् ।
पीनवृत्तमहाबाहुं सर्वशत्रुनिवारणम् ॥१॥

नानारत्नसमायुक्तकुण्डलादिविराजितम् ।
सर्वदाभीष्टदातारं सतां वै दृढमाहवे ॥२॥

वासिनं चक्रतीर्थस्य दक्षिणस्थगिरौ सदा ।
तुङ्गाम्भोधितरङ्गस्य वातेन परिशोभिते ॥३॥

नानादेशागतैः सद्भिः सेव्यमानं नृपोत्तमैः ।
धूपदीपादिनैवेद्यैः पञ्चखाद्यैश्च भक्तितः (शक्तितः) ॥४॥

व्रजामि (भजामि) श्रीहनूमन्तं हेमकान्तिसमप्रभम् ।
व्यासतीर्थयतीन्द्रेण पूजितश्च विधानतः ॥५॥

त्रिवारं यः पठेन्नित्यं स्तोत्रं भक्त्या द्विजोत्तमः ।
वाञ्छितं लभतेऽभीष्टं षण्मासाभ्यन्तरे खलु ॥६॥

पुत्रार्थी लभते पुत्रं यशोऽर्थी लभते यशः ।
विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ॥७॥

सर्वथा माऽस्तु सन्देहो हरिः साक्षी जगत्पतिः ।
यः करोत्यत्र सन्देहं स याति नरकं ध्रुवम् ॥८॥

॥ इति श्रीव्यासतीर्थविरचितं यन्त्रोद्धारकहनुमत्स्तोत्रम् ॥

श्रीव्यासतीर्थविरचितम्

# यन्त्रोद्धारकहनुमत्स्तोत्रम्

## श्रीसत्यात्मतीर्थविरचितप्रमोदतोषिणीव्याख्यायुतम्

गुणपूर्णं दोषदूरं मूलरामं प्रणम्य च ।
मध्वं जयमुनिं व्यासयोगिनं मद्गुरुं तथा ।।

स्तोत्रं यन्त्रोद्धारकस्य पवनस्य महात्मनः ।
व्यासतीर्थकृतं भक्त्या तत्प्रीत्यै व्याकरोम्यहम् ।।

**नमामि दूतं रामस्य सुखदं च सुरद्रुमम् ।**
**पीनवृत्तमहाबाहुं सर्वशत्रुनिवारणम् ।।१।।**

रामस्य दूतं– रामकार्यसाधकम् । गत्यर्थाद् ''दु'' धातोः कर्तरि क्तप्रत्यये निष्पन्नः दूतशब्दः गतिकर्तारमाह । रामाज्ञया लङ्कां गत्वा, सीताकृतिं दृष्ट्वा, तस्यै रामस्य अङ्गुलीयकं दत्वा, रावणं प्रति गत्वा, तं भीषयित्वा पुनः रामं प्रति आगतः । तथाच लङ्कां प्रति गमनकर्तृत्वाद्, रावणं प्रति गमनात्, पुनः रामं प्रति आगमनाच्च दूतशब्दः हनूमति उपपन्नः ।

अवैहि दूतमागतं दुरन्तविक्रमस्य माम् ।
रघूत्तमस्य मारुतिं कुलक्षये तवेश्वरम् ।। ता.नि.७.३८।।

इति भारततात्पर्यनिर्णयोक्तेः । न केवलमेतावदपि तु सर्वदा भगवदाज्ञया सर्वजीवजातगोपनार्थं सर्वत्र गमनाच्च भगवतो रामस्य दूतो वायुः, तथाहि [१] ऐतरेयभाष्ये–

मन्त्रोऽप्यर्थमिमं प्रहापश्यं गोपामिति स्म ह ।
एष गोप्ता हि सर्वस्य वायुस्थः पुरुषोत्तमः ।।

---

१- तदुक्तमृषिणा । अपश्यं गोपामित्येष वै गोपा एष हीदं सर्वं गोपायत्यनिपद्यमानमिति नह्येष कदाचन संविशत्या च पराच पथिभिश्चरन्तमित्या च ह्येष परा च पथिभिश्चरति ।।

स सध्रीचीः स विषूचीर्वसान इति सध्रीचीश्च ह्येष विषूचीश्च वस्त इमा एव दिश आवरीवर्ति भुवनेष्वन्तरित्येष ह्यन्तर्भुवनेष्वावरीवर्ति ।।

**ताम्रपर्णी**- उपनिषदुक्तार्थे प्रमाणमुच्यते- तदुक्तमिति ।। छन्दःस्थितस्तन्नामा विष्णुर्वायुश्च तद्धिदं गोपायतीति यदुक्तं तदृषिणा अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः ।। ऋ.सं १.१६४.३१ ।। इति मन्त्रद्रष्ट्राऽप्युक्तमित्यर्थः । अहं गोपां स्वोपासकस्यानिष्टपरिहारकत्वेनेष्टप्रापकत्वेन च गोप्तारं सर्वगोप्तारं वा, "गुपू रक्षणे" आकारप्रत्ययो गुणश्च । छन्दस्सु संस्थितं वायुं तदन्तर्गतं विष्णुं च अपश्यम् ।

ननु यस्यां कस्याञ्चिद्दिशि संस्थितो य उपासकस्तद्गोप्तृत्वं युक्तं सर्वदिग्गतत्वं, सर्वगोपकत्वं च तयोः कथमित्यत उक्तम्– अनिपद्यमानमा च परा चेति ।। अनिपद्यमानं कदाचिदेकत्रातिष्ठन्तम् । आ समन्ताच्च परा च पञ्चभूतेभ्यो बहिश्च पथिभिर्मार्गविशेषैश्चरन्तमित्यर्थः । विष्णुवाय्वोः सर्वदिक्ष्वपि रूपविशेषेण स्थितत्वाच्च सर्वगोप्तृत्वं युज्यत इत्युक्तम्– स सध्रीचीरिति ।। द्वितीया सप्तम्यर्थे । सध्रीचीनास्ववक्रासु पूर्वादिदिक्षु विषूचीनासु कोणदिक्षु वसानो वर्तत इत्यर्थः । लोकापेक्षिताभीष्टपरिज्ञानं च तस्य कथमित्यतो लोकसाक्षितया सर्वभूतान्तश्चारित्वादिति भावेनोक्तम्– आवरीवर्तीति ।। स इत्येकमत्रान्वेति । भुवनेषु लोकेषु तदन्तःस्थप्राणिषु समन्ताद् वरीवर्त्यतिशयेन लोकसाक्षितया वर्तते चरतीति यावत् ।

छन्दस्सु संस्थितो वायुः वायौ स च जनार्दनः ।
वायुश्च वायुसंस्थश्च कदाचिन्न हि तिष्ठतः ।।

**वायुर्हि नित्यसञ्चारी** सदा सर्वत्र वृत्तिमान् ।
चोदितः केशवेनैव तत्स्थेनामितशक्तिना ।।

---

खण्डशोऽनुवादपूर्वं मन्त्रार्थ उच्यते– अपश्यं गोपामित्येष वा इत्यादिना । अपश्यं गोपामित्यत्रोक्तो गोपा एष वै । वायुस्तदन्तस्थो हरिश्च नान्यः । कुतः? हि यस्माद् एष इदं सर्वं गोपायति नान्य इवाल्पमतः "असाधारण्येन व्यपदेशा भवन्ति" इति न्यायेनैष एव गोपा इत्यर्थः । अनिपद्यमानमित्यस्य नितरामतिष्ठन्तमित्यर्थमभिप्रेत्योक्तम्– न ह्येष कदाचनेति ।। आ चेत्यस्या सम्यक् पराग् बहिश्चरन्तं पूर्वोक्तादनिपद्यमानादन्यं चापश्यमित्यर्थप्रतीतेरुक्तम्- आ च ह्येष इति ।। एष एवाच परा च पथिभिश्चरतीत्यर्थः । स सध्रीचीः स विषूचीरित्यत्र स इति द्विरुक्तिर्व्यर्थेत्यत एक एव तच्छब्दोऽत्रान्वेतीत्यभिप्रेत्य व्याक्रियते- सध्रीचीश्चेति ।। वसान इत्यस्य विशेषणत्वे वसानः स भुवनेष्वन्तरा वरीवर्तीत्येकवाक्यत्वेन पुनः स इति व्यर्थमित्यतोऽवसान इति कारकक्रियेति भावेनोक्तम्- वस्त इति । सध्रीचीरित्याद्यनुवादेनेमा एव दिश इति विशेष्यमुक्तम् । आ वरीवर्तीत्यत्रैकः स इत्यन्वेतीति भावेनोक्तम्- एष हीति । एष वै गोपा इत्यत्रैतच्छब्दपरामृष्टमाह- एष गोप्ता हीति ।।

ननु प्राक् छन्दस्सु स्थितमित्युक्तमधुना वायुस्थ इत्युच्यतेऽतो विरोध इत्यत आह- छन्दस्स्विति ।। नह्येष कदाचनेत्यस्यार्थो- वायुश्चेति ।। अनिपद्यमानत्वे आ च परा चेति हेतुरुच्यत इति भावेनाऽऽह- वायुर्हीति ।। हि यस्मात् तस्मादिति पूर्वेणान्वयः । सञ्चारप्रयोजनमुक्तम्- सदा सर्वेति ।। तर्हीश्वरसाम्यमित्यत उक्तम्- चोदित इति ।। एवमवतार्य व्याचष्टे- आसमन्तादिति ।। सध्रीचीश्चेत्यादि द्वितीयां सप्तम्यर्थतया व्याचष्टे- सध्रीचीनास्विति ।। समीचीनास्ववक्रास्विति यावत् । विषूचीषु वक्रासु अत एव कोणदिक्षु । भुवनेष्वित्यस्य तत्स्थेषु सर्वभूतेष्वित्यर्थमाह- अन्तश्चेति ।। छादयन्तीति फलवाक्ये पापात् कर्मण एनं छादयन्ति गोपायति गोपायन्ति पापं कर्मास्य परिहरन्तीत्युक्तं कथं परिहरन्तीत्यत उपासकान् स्वोदरे संस्थाप्य पापाभिमानिनो यथा न स्पृशन्ति तथा आच्छादयन्तीत्यपि विवक्षितम् ।

आसमन्तात् पराक् चापि पञ्चभूतेभ्य ईश्वरः ।
वायुस्तत्स्थो हरिश्चैव चरत्यमितपौरुषः ।।

सध्रीचीनासु पूर्वादिदिक्ष्वेतौ चतसृष्वपि ।
नित्यदा वसतः कोणादिष्वथासु विषूचिषु ।।
अन्तश्च सर्वभूतेषु चरतो लोकसाक्षिणौ ।। -ऐ.भा.६.ब्राह्मणं

अनेन "वैकुण्ठगो विष्णुः" इत्यादिप्रयोगेषु स्थित्यर्थेऽपि गमधातुदर्शनाद् अत्रापि रामस्य आज्ञया रामप्रेरणया रामस्य प्रीत्यै सदा सर्वदिक्षु, विदिक्षु च स्थित इत्यर्थेऽपि दूतशब्दो वायुः भवति इति सिद्ध्यति ।

किञ्च ऋग्भाष्ये प्रथमाध्यायगतद्वादशसूक्तस्थप्रथमवर्गस्थ-प्रथममन्त्रस्य "अग्निं दूतम्" इत्यस्य व्याख्यानप्रसङ्गे–

यज्ञभागार्थमत्रस्थो देवैः सम्प्रेषितो यतः ।
दूतोऽग्निर्वासुदेवश्च तत्तत्प्रार्थितकृद्यतः ।।

इत्यभ्यधायि भगवत्पादैः । टीकायाञ्च जयतीर्थश्रीमच्चरणैरेवमुक्तम् । तथाहि– यतोऽग्निर्यज्ञभागार्थं देवैः सम्प्रेषितस्ततो दूतः । सन्देशेन यः प्रेष्यते स हि दूत उच्यते । अत्रस्थोऽग्निस्थो वासुदेवश्च तत्तत्प्रार्थित-कृद्यतोऽतो दूत इव दूतः इति । "सन्देशेन आज्ञया" इति श्रीनिवासतीर्थाः ।

अनेन दूतत्वं द्विविधम्, आज्ञया प्रेषितत्वे सति सन्देशहरत्वरूपं निकृष्टनिष्ठमेकम् । तत्तत्प्रार्थितकृत्त्वरूपमुत्कृष्टनिष्ठमपरमिति ज्ञायते । प्रकृते च रामनिरूपितं वायुनिष्ठं दूतत्वं प्रथमप्रकारमेव ।

तथा न केवलं गमनकर्तृत्वाद् दूतो वायुः । किन्तु आज्ञाप्रेषितत्वे सति सन्देशहरत्वादपि । सन्देशहरत्वमपि त्रिविधम्, उत्तमं, मध्यमं, अधमश्चेति।

१) उत्तमं निसृष्टार्थत्वलक्षणम् । तथाहि–

[२]अमात्यसम्पदोपेतो निसृष्टार्थः । अर्थशास्त्रम्.१६.२।।

उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः ।। सा.द.३-४८।।

य आजानीते तस्य यं प्रति सन्देशः कथ्येत तस्य च भावं विदित्वा उत्तरं वदति कार्यं च सम्यग् यः करोति स निसृष्टार्थः दूतः ।

२) द्वितीयं मध्यमं मितार्थत्वलक्षणम् । ‘‘पादगुणहीनः परिमितार्थः’’ अर्थशास्त्रे ।।१६.१२।।

मितार्थभाषी कार्यस्य सिध्दकारी मितार्थकः ।। सा.द.३-४९

अमात्यगुणेषु चतुर्थांशहीनः यावदुक्तं स्वामिना तावदेव वक्तुं प्रभवति परं कार्यं साधयति यः स मितार्थो दूतः ।

३) शासनहरत्वलक्षणं तृतीयमधमम् ।

---

२. जानपदः, अभिजातः स्ववग्रहः कृतशिल्पः चक्षुष्मान् प्राज्ञो धारयिष्णुः दक्षः वाग्मी प्रगल्भः प्रतिपत्तिमानुत्साहप्रभावयुक्तः क्लेशसहः शुचिः मैत्रः दृढभक्तिः शीलबलारोग्यसत्त्वसंयुक्तः स्तम्भचापल्यवर्जितः संप्रियः वैराणामकर्ता इत्यमात्यसम्पत् ।। अर्थशास्त्रम्.९.१।।

* प्रेषणं सन्धिपालत्वं प्रतापो मित्रसङ्ग्रहः । उपजापः सुहृद्भेदः गूढदण्डातिसारणम् । बन्धुरत्नापहरणं चारज्ञानं पराक्रमः । समाधिमोक्षो दूतस्य कर्मयोगस्य चाश्रयः । अर्थशास्त्र -१२-१६-३३,३४) ।

अर्धगुणहीनः शासनहरः । अर्थशास्त्रम् ।।१६.१२।।

यावद्भाषितसन्देशहरः सन्देशहारकः ।। सा.द३-४९

हनूमति तु निसृष्टार्थत्वरूपमनिकृष्टमेव दूतत्वं नितिष्ठतीति निश्चप्रचम् ।

१) न केवलं रामस्य सन्देशं सीतां निनायेति रामस्य दूतः । अपि तु रामस्य सन्देशं आज्ञाप्रकारं श्रुतिस्मृत्युक्तं सर्वानपि देवादीन् प्रति नयति अवतारत्रयेण इति रामस्य दूतः ।

२) अथवा रामस्य=प्रतिपदकतासम्बन्धेन रामवतः रामायणस्य दूतं सन्देशहारकम् । अर्श आद्यच् । सर्वदा किम्पुरुषखण्डे रामायणोपदेशं करोतीति प्रसिद्धम् । मध्वावतारेऽपि तात्पर्यनिर्णय-मुखेन रामायणसन्देशप्रापकत्वमस्ति ।

३) यद्वा, रामस्य=रामातिप्रियत्वात् रामशब्दबोध्यस्य रामभक्तसमुदायस्य दूतम् । अत्र दूतत्वं तत्तत्प्रार्थितकृत्त्वरूपं द्वितीयं विवक्षितम् । सकलरामभक्ताभीष्टानि साधयन्तमिति यावत् ।

४) यद्वा, रामस्य=रामभक्तसमुदायस्य दूतं भगवन्तं प्रति प्रार्थनारूप-सन्देशहरम् ।

५) यद्वा, रामस्य=रामायाः सीतायाः दूतं तत्सन्देशहरमित्यर्थः । माया(लक्ष्म्य)वतारभूतायाः सीतायाः पुंवच्छक्तिमत्वात् पुल्लिङ्गप्रयोगः । सीताकृतौ इन्द्रस्य प्रवेशात् तद्विवक्षया वा पुल्लिङ्गप्रयोगः । सीताकृतौ सीतायाः, इन्द्रस्य च सत्त्वे ''तस्यास्तु तां प्रतिकृतिं प्रविवेश शक्रः देव्याश्च सन्निधियुतां व्यवहारसिद्ध्यै''(५.३८) इति निर्णयवचनं प्रमाणभावं भजते ।

## सुखदम्

१) रामाज्ञया मोक्षसुखदम् । ''विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया'' (ता.नि.१.७८) इत्युक्तेः ।

२) तापत्रयं परिहृत्य ऐहिकसुखदम्[३] ।

३) सर्वेन्द्रियप्रेरकत्वात् सर्वैः ज्ञानेन्द्रियैः ज्ञानानि उत्पाद्य तद्वारा सुखदम् ।

४) शास्त्रवाक्यार्थानुभवजनितमहानन्ददम्, भक्त्यादिलाभजनित-महानन्ददश्च । सौम्यगुणाभिमानित्वोक्तेः एकादशतात्पर्ये । सौम्य-शब्दस्य निरुक्तार्थत्वं तद्व्याख्याने श्रीनिवासतीर्थीये उपलभ्यते[४] ।

---

३. कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषः प्रकृतेः परः ।। भाग.३.२७.९।।

ब्रह्मादिभिः स्वर्गकरी श्रीविष्णुबलसंश्रयात् ।
सुखदुःखप्रदो विष्णुः स्वयमेव सनातनः ।
कर्तृत्वं सुखदुःखानामन्येषां तु तदाज्ञया ।।

भोक्तृत्वं सुखदुःखानां करोत्येको हरिः स्वयम् ।
भोक्तृत्वमात्रहेतुत्वं जीवे नान्यत्र कुत्रचित् ।। इति भविष्यत्पर्वणि ।।

यादु– अन्येषां श्रीब्रह्मादीनां जीवगतसुखदुःखकर्तृत्वं तदाज्ञयैव न स्वातन्त्र्येण । तथाऽपि यत्सर्वजीवगतं सुखदुःखानां भोक्तृत्वं तद्धरिः स्वयमेक एव करोति । अतस्तस्य प्रकृतिपरत्वं युक्तमित्याशयः ।

४. आनन्दानुभवस्तूम उत्कृष्टानुभवात् स्मृतः ।
तद्युक्तत्वं यथा सौम्यं गुणानामधिकं हि तत् ।। भा.ता.११.१६.१०।।

श्रीनि– गुणानामप्यहं सौम्यमित्युक्तसौम्यशब्देन को गुणः कथ्यत इति न प्रतीयत इत्यत आह- आनन्देति ।। उम इत्युच्यते । कथमित्यत आह– उत्कृष्टेति ।। उत्कृष्टस्यानुभवत्वादित्यर्थः । उशब्द उत्कृष्टवाची । सर्वपदार्थानां मध्ये

५) रामस्य दूतं सीतां प्रति सन्देशहरं अत एव रामस्य रामायाः सीतायाः सुखदम् । रामस्य रामायाः सीतायाः दूतं रामं प्रति सन्देशहरं अत एव रामस्य सुखदमिति वा ।

६. रामस्य रामभक्तस्य वा सुखदम् ।

७. रः रामः ''रश्च रामेऽनिले'' इत्यभिधानात् । तं प्रत्यमति गच्छतीति रामः रामस्य प्रतिगामी शत्रुरिति यावत् । रामस्य रामशत्रोः रावणादेः सुखदं सुखनाशकं सुखं द्यति इति व्युत्पत्तेः । ''दो अवखण्डने'' इति हि धातुः ।

८. रं सुखं अमति गच्छति अवगच्छतीति रामः सुखानुभविता । असाधारण्येन व्यपदेशात् स्वरूपसुखानुभवयोग्यः सुजीवोऽत्र गृह्यते । तस्य सुखदं शोभनानि च तानि खानि च सुखानि, शास्त्रानुसारि-प्रवृत्तिभाञ्जि इन्द्रियाणि, तानि ददातीति । सम्प्रदानत्वं न विवक्षागोचरः।

९. रामस्य रामभक्तस्य वा सुखदं समीचीनेन्द्रियदम् ।

---

आनन्दस्यैवोत्कृष्टत्वेन योग्यतयाऽऽनन्दस्येति सम्बन्धः । मशब्दो माङ् मान इत्यनुभववाची । तथा चोत्कृष्टस्यानन्दस्यानुभव उमस्तद्युक्तः पुमान् सोमस्तद्युक्तत्वं तस्य भाव इत्यर्थः । तस्यानन्दानुभवयुक्तस्य भावो धर्मः । आनन्दानुभव एव सौम्यं तद्गुणानां भक्त्यादीनां मध्येऽधिकमित्यर्थः । नन्वत्र सर्वगुणापेक्षयाऽधिकतयोच्यमान आनन्दानुभवः को विवक्षितः । न तावद्वैषयिकः, तस्य भक्त्यादिगुणोत्तमत्वस्य बाधितत्वात् । नाऽपि मौक्तः । वक्ष्यमाणान्वय-व्यतिरोकयोस्तत्र बाधितत्वादिति चेत् । उच्यते । अस्त्यत्र सम्प्रदायविशेषः । स्वस्य सद्गुरूपसम्पत्त्यादिना भक्त्यादिकं मया प्राप्तमतः परं मम मोक्षो भविष्यत्येव । मदीयं जन्मजन्मान्तरीयं पुण्यमद्य फलितमित्येवं सन्तोषविशेषवान् भवति । स आनन्दानुभवोऽत्र गुणोत्तमतया सौम्यशब्देन विवक्षितः ।

१०. रामस्य सु-ख-दम् । शोभनं भक्तिज्ञप्तिविरक्तिप्रभृति-गुणततिपूर्तिमत् च तत् खं हृदयाकाशं च सुखं तद्दम् । हृदयाकाशे स्वयमेव स्वातन्त्र्येण स्थितमपि रामभद्रं तत्त्वेन ध्यायन्तमिति यावत् ।

११. रामस्य रामभक्तस्य सुखदं, उषितुमवकाशप्रदम् । हृदये वा अवकाशदं सर्वदा तद्धितचिन्तकमिति यावत् । चशब्दः अनुक्तविशेषणसहस्रसमुच्चायकः ।

१२. सुखदो विष्णुः । ''अनन्तो हुतभुग् भोक्ता सुखदो नैकजोऽग्रजः'' इति वैष्णवे पदसहस्रतये । सोऽस्यास्ति स्वामित्वेन इति सुखदः । अर्श आद्यच्, तम् ।

१३. सुखदा गङ्गा । ''सुखदा मोक्षदा गङ्गा'' इत्युक्तेः । साऽस्यास्ति भक्तत्वेनेति सुखदस्तम् । ''भित्वा भुवं देवनदी जगाम शाखाविशेषेण निवेषिवतुं तम् । वाणी च यत्प्रेष्यतया कृतार्था शिवादिवन्द्या न तदत्र चित्रम्'' इति हि नारायणपण्डिताचार्याः अमण्डयन्त ।

## सुरद्रुमम्

सुरद्रुमवदाचरतीति सुरद्रुमति, सुरद्रुमतीति सुरद्रुमः तम् । प्राज्ञप्रार्थितप्रदाने प्राज्ञप्रवेकपादपप्रकारम् । पुण्यवत्प्रार्थितानर्थान् यथा कल्पवृक्षः कल्पयते तथाऽयमपीति भावः ।

''चते'' याचने इति धातोः चत्यते याच्यते इति चः स चासौ सुरद्रुमश्च तमित्येकं वा पदमनुसन्धेयम् ।

चः गुणोच्चयरूपः स चासौ सुरद्रुमश्चेति वा । ''गुणानामुच्चयो यस्मात् स 'च' इत्येव शब्दितः'' इत्यैतरेयभाष्योक्तेः । (ऐ.भा.द्वि.प्र. पञ्चमेऽध्याये) ।

सुरश्चासौ द्रुमश्चेति वा ।

''षुर'' ऐश्वर्यदीप्त्योः कः । सुरति ईष्ट इति सुरः । महैश्वर्यवान् । ''धर्मविज्ञानवैराग्यपरमैश्वर्यशालिनः'' इत्युक्तेः । दीप्यते इति वा तेजोमयत्वात् ।

सुष्ठु राति ददात्यभीष्टमिति सुरः । ''रा'' दाने कः । सुष्ठु राजते ''राजृ'' दीप्तौ कः । सुनोति ''षुञ्'' अभिषवे, क्रन् औणादिकः । स हि यजमानादिषु स्थित्वा सोमं सुनोति । स्वयं च वेदोक्तसर्वयज्ञ-कर्तृत्वात् पवमानस्य युक्तमेतत् । द्रुमः विटपवज्जीववि(पक्षि)आश्रयः ।

यद्वा, हे हनूमन् यतस्त्वं रामसि रामवदाचरसि अतो दूतं मत्प्रार्थितकृतं असुखदं अकारवाच्यवासुदेवावताररामसमोददं त्वां नमामि । ''अकारो वासुदेवः स्यात्'' इत्युक्तेः अकारो वासुदेववाची । वासुदेवावतारत्वाद्रामस्य, अः रामः इत्यर्थः समपद्यत । तथाहि विष्णुधर्मोत्तरे-

दुष्टानां निग्रहार्थाय चतुर्मूर्तिर्जनार्दनः ।
जातो रघुकुले राजन् पुत्रो दशरथस्य तु ।
अंशेन वासुदेवस्य जातो रामो महायशाः ।।

तस्मादुक्तं न साधुताधूतम् । अथवा रामस्य दूतं त्वां नमामि भो हनूमन् । त्वं मदर्थे सुखद् सुखप्रदं सुरद्रुमं कल्पवृक्षवत् स्थितं परं ब्रह्म अञ्च पूजय गच्छ याचस्व च ।

सुखं ददातीत्यर्थे सुखोपपदाद् दा धातोः ड्विः, नपुंसकद्वितीयैक-वचनम् । ''अश्रु'' गतिपूजनयोः ''अश्रु'' गतौ याचने च इति धात्वोः लोण्मध्यमैकवचनम् ''अश्र'' इति । वायुर्यदा पूजयति तदैव तत्प्रेरिता वयं पूजयितुं प्रभवामः, अत इयं प्रार्थना । तथा, अस्माकं कृते स एष गत्वा यदि याचते तर्ह्येव अर्थाः सिद्ध्यन्ति नान्यथा । ''उन्नतप्रार्थिताशेषसंसाधकम्'' इि वाचःपतेः वागेतमेवार्थ-मवातिष्ठिपद्धि ।

## पीनवृत्तमहाबाहुम्

१) पीनौ पुष्टौ दृढौ वृत्तौ वर्तुलौ महाबाहू यस्य तम् ।

२) पीन पुष्टः वृत्तः दृढः  महाबाहुः दीर्घबाहुः, प्रलम्बबाहुर्वा । पीनश्चासौ वृत्तश्चासौ महाबाहुश्च पीनवृत्तमहाबाहुः तम् । विशेषणमात्रघटितकर्मधारयः ।

अत्र दीर्घबाहुत्वकथनेन प्रलम्बबाहुत्वकथनेन वा सर्वजीवराजत्वं वायोः सूचितम् । तथाहि–

दीर्घबाहुर्भवेद्राजा समुद्रवचनं यथा ।
प्रलम्बबाहुरैश्वर्यं प्राप्नुयाद्गुणसंयुतम् ।।

३) पीनाः पुष्टाः वृत्ताः सदाचारवन्तः यस्मात् स चासौ महाबाहुश्च । वृत्तशब्दात् सदाचारार्थाद् अर्श आद्यच् ।

४) वृत्ताः धर्मेण न्यायेन परिपालनशीलाः च ते महाबाहवः क्षत्रियाश्च वृत्तमहाबाहवः, पीनाः पुष्टाः वृत्तमहाबाहवो यस्मात् । वृत्तशब्दादत्राप्यच् । वृत्तशब्दस्य निरुक्तार्थकत्वं रघुवंशे- ''किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम्'' ५.३३ ।।

५) वृत्तं सच्चारित्र्यमस्ति आसु इति वृत्ताः पतिव्रताः स्त्रियः । पीनाः सौमाङ्गल्यसौभाग्यादिना पुष्टाः वृत्ताः पतिव्रताः यस्मात् सः पीनवृत्तः, स चासौ महाबाहुश्च उक्तार्थे प्रयोगः- ''आपद्यपि सतीवृत्तं किं मुञ्चन्ति कुलस्त्रियः'' इति कथासरित्सागरे ।

६) वृत्ता मृताः महाबाहवः दुष्टराजानो यस्मात् वृत्तमहाबाहुः, पीनश्चासौ वृत्तमहाबाहुश्च, तम् । [५]वृत्तो मृत इत्यर्थे प्रयोगः, ''वृत्तं युद्धे शूरमाश्लिष्ट काचित्'' माघे १८-६०

७) पीनं परिपुष्टं उपनिषदादिप्रमाणोपोद्बलितं वृत्तं इतिहासः यस्य विषये स पीनवृत्तः स चासौ महाबाहुश्चेति वा, तादृशः महाबाहुः विष्णुः अस्ति अनुग्रहकतया यस्येति वा तम् । महाबाहुशब्दस्य विष्णवर्थकत्वस्थितेः कोशे ।

८) पीनानि विष्णुभक्तिरसपुष्टानि वृत्तानि वृत्तवन्ति पद्यानि रामायणस्थानि उच्चार्यतया सन्ति यस्मिन् पीनवृत्तः स चासौ महाबाहुः रामनामभजनकाले भक्त्या करताडनप्रयोजकत्वरूपमहत्त्वयुक्तबाहुमांश्च तथा तम् ।

९) पीनं सीतासन्दर्शनाङ्गुलीयकदानतच्चूडामण्याहरणादिविषयकतया पुष्टं वृत्तं वार्ता येन (श्राविता) सः पीनवृत्तः, स चासौ महाबाहुश्च तम् । पर्वताकारतनुत्वाद्गमनवेलायाम् ।

१०) पीनः परिपुष्टः ब्रह्माण्डाधारशेषाधारभूतश्चासौ वृत्तः कूर्मरूपवान् च, स चासौ महाबाहुः । इच्छया सङ्कोचविकासयोग्यत्वरूपमहत्त्वयुक्तबाहुमान् । वृत्तः कूर्मः इति आभिधानिकाः ।

---

५. वृत्तोऽतीते दृढे ख्याते वर्तुलेऽपि वृते मृते ।। इति विश्वः

११) पीयते देवैरिति पिः चन्द्रः पिबतेर्डिः, इनः सूर्यः, पिश्च इनश्च पीनौ चन्द्रसूर्यौ, वृत्तं परिवेषः अस्ति अनयोरिति वृत्तौ । पीनौ वृत्तौ परिवेषवन्तौ यस्मादिति पीनवृत्तः । हनूमत्प्रभां दृष्ट्वा विरिञ्चिः विधोः भानोश्च परिवेषं वैयर्थ्यसूचकं विदधाविति भावः । स चासौ महाबाहुश्च ।

१२) पिबति स्वाख्यरसमिति पिः, पाति रक्षतीति वा पिः, पातेः पिबतेर्वा डिः । कपिलनामा हरिः । ''सुखादनन्तात्पालनात् लापनाच्चे''ति (१०.२६) गीताभाष्योक्तेः । नामैकदेशग्रहणे नामग्रहणात् कपिल-नामैकदेश'पि'ग्रहणे कपिलनामग्रहणं कार्यम् । तथाच च पिः सर्वकर्मपालकः, सर्वकर्मफलभोजयिता कपिलः, इनः स्वामी, यस्य सः पीनः हनूमान्, हनूमन्तं कपिं भृत्यत्वेन लाति स्वीकरोतीति कपिलः हरिः, पिः सः कपिलः इनः अस्येति पीनः हनूमानिति सम्बन्धः अन्योन्यं सम्यगस्ति । स चासौ वृत्तश्च सदाचारवांश्चासौ महाबाहुश्च तम् ।

१३) पीनाद् भगवतो वृत्तं चारित्र्यं यस्य स चासौ महाबाहुश्च ।

१४) वृत्तं सत्त्वं च महाबाहू च वृत्तमहाबाहवः । पीनाद् भगवतो वृत्तमहाबाहव यस्य इति वा ।

१५) पिबन्ति इति पयः कर्मफलभोक्तारो जीवाः तेषां इनाः स्वामिनः देवाः पीनाः, तेषामेव मुख्यफलभोक्तृत्वात् । वृत्ताश्च चारित्र्यवन्तः सत्त्ववन्तो वा महाबाहवश्च यस्मात् सः तम् ।

१६) पीनाः देवाः वृत्तमहाबाहवः मृतशूरशत्रवः यस्मात् तम् ।

१७) पीनवृत्तश्चासौ महाबाहुः महत्तत्वात्मकबाहुश्च तम् ।

१८) पीनवृत्तश्चासौ महाबाहुः सङ्ख्याकृतमहत्त्ववद्बाहुश्च, तम् । त्रिकोटिरूपस्य षट्कोटिबाहुमत्वात् । अनन्तरूपस्य अनन्त-बाहुमत्वाच्च ।

## सर्वशत्रुनिवारणम्

१) सर्वे आन्तरा बाह्याश्च ये शत्रवः रावणादयः तेषां निवारणं संहारकम् । संहारो यस्मादिति वा ।

२) सर्वस्य नारायणस्य ये शत्रवः तन्निवारणम् । ''सर्वः शर्वः शिवः स्थाणुः'' इति विष्णुनामसु पाठात् ।

३) ''सर्वं समाप्नोषि ततोऽसि सर्वः'' (गीता.११.४०) इत्युक्तेः, सर्वस्य (भावप्राधान्यात्) सर्वत्वस्य पूर्णत्वस्य शत्रवः तन्निवारणम् ।

४) ''स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता ।
यतः सर्वस्य तेनाहं सर्वोऽस्मीत्यृषिभिः स्मृतः ।। ७.५।।

इति गीताभाष्योक्तेः, सर्वस्य, भावप्राधान्यं, सर्वत्वस्य सर्वसृष्टि-कर्तृत्वस्य, सर्वस्थितिकर्तृत्वस्य सर्वसंहारकर्तृत्वस्य, सर्वज्ञानकर्तृत्वस्य शत्रवः विरोधिनः निष्क्रियत्ववादिनः स्थितिकर्तृत्वमात्रवादिनः यत्किञ्चिन्महाकल्पीयपदसम्बन्धिसृष्टिकर्तृत्वादिवादिनो वा ये तन्निवारणम् ।

५) सर्वस्य जगतः शत्रवः तन्निवारणम् ।

**नानारत्नसमायुक्तकुण्डलादिविराजितम् ।**
**सर्वदाभीष्टदातारं सतां वै दृढमाहवे ।।२।।**

## नानारत्नसमायुक्तकुण्डलादिविराजितम्

१) नाना नानावर्णयुक्तानि नानागुणयुक्तानि च तानि रत्नानि मणिमाणिक्यप्रवालवैडूर्यादीनि च नानारत्नानि, तैः सम्यग् दार्ढ्येन न तु शैथिल्येन, सौन्दर्यवर्धकत्वेन, मनोरञ्जकत्वेन च, न तु यथाकथञ्चित् आसमन्तात् न तु पुरोभागमात्रे युक्तानि नानारत्न-समायुक्तानि । कुण्डलः आदिः येषां तानि कुण्डलादीनि कुण्डलमुकुट-काञ्च्यङ्गदादिभूषणानि तैः वि विशेषेण राजितम् दीप्तम्, शोभितं वा ।

२) तानि एव वा विराजितानि दीप्तानि येन यच्छरीरकान्त्या इति यावत्, तम् ।

३) यद्वा नानारत्नानि शिरोमणयः तैः समायुक्तः सम्यक् सहजतया न तु आगन्तुकतया आ समन्तात् सर्वफणावच्छेदेन न तु यत्किञ्चित् फणावच्छेदेन युक्तः नानारत्नसमायुक्तः ।

कुण्डलमस्यास्तीति कुण्डलः, कुण्डलवान् अहिः शेषदेवः, नानारत्न-समायुक्तश्चासौ कुण्डलश्च नानारत्नसमायुक्तकुण्डलः । तथाहि भागवते तृतीये नवमाध्याये द्वात्रिंशत्तमे श्लोके,

मृणालगौरायतशेषभोगपर्यङ्क एकं पुरुषं शयानम् ।
फणासहस्रायुतमूर्धरत्नद्युभिर्हतध्वान्तयुगान्ततोये ।।३.९.३२।।

यादुपत्ये– फणानां सहस्रे आ सम्यग् युतानि सम्बद्धानि, सहजानीति यावत् । यानि मूर्धरत्नानि तेषां द्युभिः प्रभाभिः हतं ध्वान्तं यस्य तत्तथा ।

अत्तीति अदिः संहर्ता रुद्रः, औणादिकः इः, बहुलग्रहणात् । विः पक्षिराड् गरुडः, स च स च अयं च, नानारत्नसमायुक्तकुण्डलादिवयः, तैः सेवकतया, स्तावकतया, परिवरतया परितः स्थितैः राजितं शोभितं दीप्तं वा ।

४) नानारत्नसमायुक्तत्वं कुण्डलादिवीनां त्रयाणामपि विशेषणं वा । सहजमण्यभावेऽपि भूषणादिद्वारा तत्समायुक्तत्वानपायात् । रुद्रस्य अश्वत्थामावतारे सहजमणिसद्भावाच्च । रुद्रस्य शेषत्वावस्थायां तत्सत्त्वाद्वा । सम्यग् अन्तर्यामिसमर्पितभूषणानीति बुद्ध्या आसमन्तात् यथायोग्यं सर्वाङ्गेषु युक्ताः इत्यर्थकरणे तु न कश्चित् क्षुद्रोपद्रवः ।

५) ननु प्रथमार्थानुसारेण नानाभरणभूषितत्वं स्त्रीमनोरञ्जनाय इति न शङ्कनीयम् ब्रह्मचारित्वाद्धनुमदवतारस्येत्याह– **नानेति** ।। अश्च नश्च अनौ, न विद्येते अनौ यस्मिन् तदानं, ''अमानोनाः प्रतिषेधे'' इति वचनादः प्रतिषेधपरः समस्ति । असमासोऽयम्, न नञ्समासः । आनं च तदरत्नं च आनारत्नं, अकारनकाररहितः अरत्नशब्दो नाम रतशब्दः । अकारः प्रथम एव गृह्यते । अरत्नशब्दः स्वरूपवाचकः, रतशब्देन तदर्थः सुरतं गृह्यते । तेन समायुक्तो न भवतीति नानारत्नसमायुक्तः । स चासौ कुण्डलादिविराजितश्च । तथाच कुण्डलादिकं केवलं भगवदाज्ञया भगवत्प्रीत्यर्थं अन्तर्याम्य-लङ्करणार्थं चेति भावः ।

६) अनस्य रत्नानि अनरत्नानि, न अनरत्नानि अनारत्नानि । न साध्याधिकरणं साध्यानधिकरणमिति यथा । अनारत्नसमायुक्तानि न भवन्तीति नानारत्नसमायुक्तानि । तादृशकुण्डलादिभिर्विराजितम् । नतु अन्यदीयतत्समायुक्तताद्विराजितम् ।

७) रामस्य दूतमिति प्रथमावतारविवक्षया । नानेति द्वितीयावतारविवक्षया । सर्वशत्रुनिवारणमिति निरुक्तरीत्या तृतीयावतारविवक्षया । तदा तु नानास्त्रीभिः रत्नानि सुरतानि "रतिधारकोत्तमत्वात्स रत्नधातम ईरितः" इति ऋग्भाष्योक्तेः, रत्नशब्दस्य रत्यर्थकत्वम् । तत्समायुक्तः भीमः, काली-द्रौपदी-हिडिम्बी-रौहिणेयीदेवी-(२०)वासुदेवीभिः चतुर्विंशतिसंख्याकाभिः पत्नीभिर्युक्त इति महाभारततात्पर्यनिर्णये (अ.३०.श्लो.१०-११-१२) कथनात् । स चासौ कुण्डलादिविराजितश्च तम् ।

८) "जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते" इति कथनात् जगति तत्तज्जातौ ये उत्कृष्टाः तैः सर्वैः शुभैः पदार्थैः युतम्, इति नानारत्नसमायुक्तशब्दार्थः । स चासौ कुण्डलादिविराजितश्च तम् ।

## सर्वदाभीष्टदातारम्

१) "नानाशब्दो विनार्थे स्यात् तथाऽनेकोभयार्थयोः" इति मेदिनीकोशात् नानाशब्दो विना इत्यर्थेऽपि वर्तते । तथाच नानेति भिन्नं पदम् । रत्नसमायुक्तकुण्डलादिविराजितं नाना विना अन्येभ्यः सर्वदाभीष्टदातारं सर्वाभीष्टप्रदज्ञानरूपाभीष्टदातारम् । अस्यां विवक्षायां सर्वदाभीष्टदातारमित्येकं पदम् । भगवतः अपरोक्षज्ञानस्य सर्वाभीष्टप्रदत्वं "यावानर्थ उदपाने सर्वतः सम्प्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥" (२.४६) इति भगवद्गीतया सिद्धम् । रत्नेत्यादिना भोगसक्तो लक्ष्यते । तं विनेत्यनेन "विरक्तानामेव च ज्ञानम्" इति भाष्योक्तं विवक्षितम् ।

२) सर्वदा अभीष्टदातारमिति भिन्ने वा पदे । यथेतरत्र राजादिभिरभीष्टदानार्थं समयनिर्बन्धः कृतस्तिष्ठति न तथाऽत्रेति भावः ।

श्वासोच्छ्वासरूपः जीवस्वरूपगतचैतन्यप्रेरणरूपः मनआदीन्द्रियप्रेरण-रूपो वा अभीष्टः, अह्नि दीयते न रात्रौ इति, रात्रौ दीयते नाह्नि इति वा, अद्य न श्वः इति, परश्व इति वा यद्युच्यते मातरिश्वना का दशा स्यात्समेषां जीवानामित्यालोचयन्तु सन्तः ।

३) सर्वं भगवन्तं ददति शिष्येभ्य उपदिशन्ति इति सर्वदाः पाठप्रवचननिरता ज्ञानिनः तेभ्यः अभीष्टदातारम् । "सर्वः शर्वः शिवः" इति विष्णुसहस्रनामसु ।

४) "सर्वं पूर्णमिहोच्यते" भावप्रधाननिर्देशः । सर्वं सर्वत्वं भगवतो गुणपूर्णत्वं ददति उपदिशन्तीति सर्वदाः, तदभीष्टदातारम् ।

५) सर्वं भगवतः सर्वसृष्ट्यादिकर्तृत्वं ददति उपदिशन्ति इति वा सर्वदाः, तदभीष्टदातारम् । "स्रष्टा पाता च" इत्यादि प्रागुक्तमानात् ।

## सतां वै दृढमाह्वे

१) सतामाह्वे दृढम् । सतां असद्भिः सह आह्वे युद्धे दृढं सत्पक्षे दृढम् । सज्जनपक्षे स्थित्वा तद्रक्षणकर्तारमिति यावत् । अवतारत्रयेऽपि दृष्टमेतत् ।

२) सतां आह्वे सत्कर्तृके यज्ञे दृढं तन्निर्वर्तनाय ऋत्विग्यजमनादिषु दार्ढ्येन स्थितं फलदानाय देवादिषु दार्ढ्येन स्थितमित्यर्थः ।

**वासिनं चक्रतीर्थस्य दक्षिणस्थगिरौ सदा ।**
**तुङ्गाम्भोधितरङ्गस्य वातेन परिशोभिते ॥३॥**

चक्रतीर्थस्य तुङ्गभद्रानदीस्थचक्रनामकजलावर्तयुक्तचक्राकारतीर्थ-विशेषस्य दक्षिणस्थगिरौ दक्षिणभागस्थे शैले तुङ्गाम्भोधितरङ्गस्य

तुङ्गाशब्दितनदीरूपजलनिधेः यस्तरङ्गसमुदायः तत्सम्बन्धिना वातेन वायुना परिशोभिते अलङ्कृते शैत्यपावनात्वादिविशिष्ट इति यावत् । सदा वासिनम् सर्वदा निवसन्तम् ।

यद्वा चक्रतीर्थस्य इत्यस्य चक्राभिमानिदुर्गायाः कामस्य च गुरोः इत्यर्थः । रामस्य इत्यनेन व्यवहितेनापि अन्वयः ।

## दक्षिणस्थगिरौ

दक्षिणस्थगिरौ इत्यस्य एवमर्थः । नहि जगदाधारकूर्मरूपिणं वायुं धर्तुमयं गिरिः समर्थः । अत एव भीमगात्रस्पर्शेन गिरिः शतधा अभिद्यत इति भारते श्रूयते । किन्तु लक्ष्मीनारायणौ आश्रितः वायुः तिष्ठति गिरौ । तथा च जडे गिरौ वायुः वर्तते अन्तर्यामी । स च लक्ष्मीनारायणाश्रितः । तस्मिन् लक्ष्मीनारायणाश्रिते गिरिस्थे स्वस्वरूपे एव वस्तुतो वायुस्तिष्ठति, न तु जडे ।

तथाहि दक्षे इन यस्य स दक्षिण अर्धनारीरूपेण भगवता सह स्थिता रमा । पुंवच्छक्तिमत्वात् पुल्लिङ्गशब्दवाच्यत्वम् । अर्धभागे पुरुषस्य सत्वाद् वा । गिरिर्नाम वायुः । "गिरिः प्राणः समुद्दिष्टः"(४.२.२६) इति भागवततात्पर्योक्तिः । "अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वर इति च ।

तथाच दक्षिणस्थगिरौ इत्यस्य लक्ष्मीनारायणस्थे वायौ इत्यर्थः, तत्र स्वस्मिन्नेव रूपे सदा वासिनम् । तेन न पर्वतभेदप्रसक्तिः ।

अथवा, चक्रतीर्थस्य चक्रेण विष्णुसुदर्शनचक्रेण तप्तेन, गोपीचन्दलिप्तेन वा धृतेन तीर्थं तीर्थत्वं पावित्र्यं यस्य सः चक्रतीर्थः विष्णुभक्तो विप्रः, "तीर्थीकुर्वन्ति तीर्थानि स्वात्मस्थेन गदाभृता"

इति प्रयोगात् । निर्देशस्य भावप्राधान्यं भावविद्वोचर एव । तस्य यो दक्षिणः दक्षिणकर्णः तत्स्थः यो गिरिः पूज्यदेवसमुदायः तत्र सदा वासिनम् । ''गिरिः पूज्येऽक्षि रुजि कन्दुके''(हेम) इत्यभिधानम् । ''ब्रह्मा विष्णुश्च रुद्रश्च सोमः सूर्योऽनलस्तथा । ते सर्वे चापि तिष्ठन्ति कर्णे विप्रस्य दक्षिणे । इति पराशरः । वायुना विना ब्रह्मणो देहः पूतिमेष्यति इति बृहद्भाष्ये कथनाद् वायुः ब्रह्मदेहे तिष्ठतीति सिद्धम् । वायुप्रवेशे उत्थानं वायुर्निर्गमे पातश्च ब्रह्मदेहस्य इममेवार्थं द्रढयति । विष्णोः वाय्वाश्रयत्वं प्रसिद्धमेव । रुद्रसोमसूर्यानलेषु मनश्चक्षुर्वागभिमानिषु प्रेरकतया वायोः सत्वमपि श्रुतिशिरस्सु सिद्धम् ।

तुङ्गाम्भोधितरङ्गस्य वातेन परिशोभितत्वमस्य पूज्यदेवसमुदायरूपगिरेः कथमिति चेदित्थम् । तुङ्गः उन्नतः इतरापेक्षया उत्कृष्टः यः आम्भोधिः कर्मसागरः अम्भस्शब्दस्य कर्मवाचकत्वात् । तस्य यो तरङ्गः एकैकसुकर्मरूपः तस्य वातेन पुण्यरूपसौरभयुक्तवातेन पुण्येनेति यावत् परिशोभिते ।

ननु ब्रह्मादीनां पुण्ययुतत्वं सम्भवति । विष्णोः कथं युज्यते इति चेत् तत्रोच्यते । अन्यसज्जनकृतकर्मजन्यपुण्यसमर्पणेन प्रसन्नत्वमेव । तादृशवातेन परिशोभितत्वं विवक्ष्यत इत्यदोषः ।

अथवा– तुङ्गाम्भोधितरङ्गस्य वातेन परिशोभिते– यथायोग्यमुत्कृष्टो यः कर्माख्यजलाशयः तस्य यः एकैककर्मरूपः तरङ्गः तस्य वातेन पुण्याख्येन परिशोभिते चक्रतीर्थस्य गण्डक्याः दक्षिणस्थः यः गिरिः भारतभूमिस्थः पूज्यसात्विकजनसमुदायः तत्र प्रेरकतया फलप्रदतया च सदा वासिनम् ।

यद्वा– तुङ्गाम्भोधितरङ्गस्य उक्तरीत्या सत्कृतैकैकसुकृतस्य विषये दूतं रामस्य । रामाज्ञया सज्जनकृतमेकैकमपि सुकृतं रामाय अर्पयतीति यावत् ।

गिरेः वातेन परिशोभितत्वमेव विशेषणम् । समीचीनेन सौरभयुक्तेन वातेनेति लभ्यते । असाधारण्येन व्यपदेशा भवन्तीत्यनेन न्यायेन ।

अथवा वातेन वायुदेवेन परिशोभिते अस्मत्कृतप्रतिष्ठापनात् पूर्वमेव अलङ्कृते गिरौ अस्मत्कृतप्रतिष्ठापनोत्तरं सन्निधानविशेषेण सदा वासिनम् ।

स जडोऽपि गिरिः निरुक्तरीत्या तुङ्गाम्भोधितरङ्गस्य वातेन सज्जनसुकृतवातेन परिशोभितः । ''यथा वृक्षस्य सम्पुष्पितस्य दूराद् गन्धो वात्येवं पुण्यस्य कर्मणो दूराद् गन्धो वाति'' इत्युक्तदिशा परितः वर्तमाना ये सज्जनाः तुङ्गातीरस्थाः तदीयसदाचार-सत्कर्मानुष्ठानादिभिः पाविते गिरौ तत्प्रीत्यै सदा वासिनम् ।

**नानादेशागतैः सद्भिः सेव्यमानं नृपोत्तमैः ।**
**धूपदीपादिनैवेद्यैः पञ्चखाद्यैश्च भक्तितः (शक्तितः)॥**

१) नानादेशागतैः विविधदेशविशेषेभ्यः आगतैः सद्भिः ज्ञानश्रद्धा-भक्तिविरक्त्यादिसद्गुणगणमण्डितैः नृपोत्तमैः राजश्रेष्ठैः धूपदीपादिनैवेद्यैः पञ्चखाद्यैश्च भक्ष्यभोज्यलेह्यपेयचोष्यरूपैः साधनैः भक्तितः सेव्यमानं हेमकान्तिसमप्रभं सुवर्णकान्तिसदृशकान्तियुक्तम् । हनूमन्तं व्रजामि शरणमिति शेषः ।

२) अथवा नानेति भिन्नं पदं विनार्थे । अन्यैरिति अध्याह्रियते । अपीति शेषः । तथाच देशागतैः दूरदेशागतैः तद्देशवर्तमानैर्वा नृपोत्तमैः

नाना विना अन्यैः सद्भिः अपि भक्तितः (सेव्यमानम्) धूपादिभिः साधनैः सेव्यमानम् ।

३) यद्वा– नाना नानात्वं जीवब्रह्मभेदं आदिशन्ति उपदिशन्ति इति नानादेशाः भेदोपदेशकाः ज्ञानिनः तत्प्रेरणाया आगताः तथा, तैः सेव्यमानम् । नानादेशैः आ सम्यग् गतं ज्ञानं येषां ते इति वा, तैः सद्भिः सेव्यमानम् ।

४) अनो वायुः न विद्यते प्रेरकतया यस्मिन् सः नानः विष्णुः, तस्य आदेशः ''वायौ मुख्यधिया'' इत्यादिरूपः तस्मात् कारणादागताः इति वा ।

५) नानादाः नानाफलप्रदा देवाः तेषामीशः रुद्रः, ब्रह्मा, विष्णुर्वा । तस्मात् तदनुग्रहाद् आगता इति वा ।

नृपाः राजानः चक्रवर्तिनः तेभ्य उत्तमा देवर्षिपितरः तैः । बहुव्रीहिणा मनुष्योत्तमा अपि ग्राह्याः । नरो मनुष्याश्च पाः चक्रवर्तिनश्च नृपाः ते च ते उत्तमाश्च, तैः तथाच देवर्षिपितृपनरैः । सेव्यमानत्वं लब्धम् ।

## धूपदीपादिनैवेद्यैः

धूपदीपादिभिः सहितैः नैवेद्यैः तद्रूपैः ।

## पञ्चखाद्यैश्च

पञ्चखाद्यैः चशब्देन अनुक्तसमुच्चायकेन अन्यैश्च करणैः सेव्यमानम् । धूत्काराद् दोषाणामरीणां च धूपः, दीप्यमानत्वाद् दीपः, आदित्वात् कारणत्वाज्जगतः आदिः त्रयाणां कर्मधारयः, धूपदीपादिः विष्णुः तदर्पितनैवेद्यैः पञ्चखाद्यैः । हर्यनिवेदितं हरिर्नाहरति ।

पञ्च च तानि खानि च पञ्चखानि पञ्चज्ञानेन्द्रियाणि, तेषामद्याः पञ्चखाद्याः शब्दस्पर्शरूपरसगन्धाः, तैः वैदिकतान्त्रिकस्तोत्ररूपैः सङ्गीतरूपैश्च शब्दैः चन्दनगतशब्दशीतस्पर्शरूपरसगन्धैः, दीपगत-शब्दरूपोष्णस्पर्शैः, नैवेद्यगतशब्दस्पर्शरूपरसगन्धैः, व्यजनोद्भूत-वायुगतशब्दस्पर्शाभ्यां इत्यादिक्रमेण शब्दादिरूपपञ्चखाद्यैः सह तानर्पयन्निति यावत् । हनूमन्तं व्रजामि । शरणमिति शेषः ।

**व्रजामि श्रीहनूमन्तं हेमकान्तिसमप्रभम् ।**
**व्यासतीर्थयतीन्द्रेण पूजितश्च विधानतः ॥५॥**

## व्यासतीर्थयतीन्द्रेण

व्यासतीर्थनाम्ना यतीन्द्रेण यतिश्रेष्ठेन । ननु कथं स्वस्य श्रैष्ठ्यं स्वयं वक्ति इति चेन्न । श्रीमदाचार्यटीकाचार्यग्रन्थाध्येतृत्व-तद्व्याख्यातृत्वप्रयुक्तश्रैष्ठ्यस्य विवक्षितस्य तच्छ्रैष्ठ्ये एव पर्यवसानधिया उपपत्तेः ।

व्यासः तीर्थः गुरुः येषां ते व्यासतीर्थाः मध्वाचार्यजयमुनि-श्रीपादराजब्रह्मण्यतीर्थादयः त एव इन्द्रा नियामका यस्येति वा ।

व्यासस्य स्वस्य तीर्थं तीर्थत्वं येभ्यस्ते व्यासतीर्थाः यतयः श्रीपादराजाः ब्रह्मण्यतीर्था वा त एव इन्द्रा यस्येति वा ।

## विधानतः पूजितं

१) तन्त्रशास्त्रोक्तमार्गेण पूजितं हनूमन्तं शरणं व्रजामि ।

व्यासः तीर्थः गुरुः यस्य व्यासतीर्थः स चासौ यतीन्द्रश्च व्यासतीर्थयतीन्द्रः श्रीमध्वाचार्यः, तेन पूजितं च हनूमन्तं

हनूमच्छब्दवाच्यं हनूमदन्तर्गतं हनूमन्नामकं रामं च शरणं यामि न केवलं अधिष्ठानभूतं हनूमन्तम् ।

२) विधया शास्त्रोक्तप्रकारेण आनतः नतमस्तकः सन् व्रजामि इति वा ।

३) वेः गरुडस्य हनूमत्पूजाधिकारिमुख्यपुरुषस्य धानतः सन्निधानतः। उपसर्गाणां द्योतकत्वात् । वीनां विशिष्टानां भारत्यादि-सर्वदेवानां धानतः सन्निधानतो वा । तेषां सन्निधानबलादेव वायुभक्तिः वायुपूजासक्तिः वायुपूजाशक्तिः भवतीति भावः ।

४) विं परमात्मानं रामं धरति स्वस्कन्धे इति विधः हनूमान्, स चासौ अनश्च मुख्यप्राणश्च विधानः, तस्मात् तत्प्रेरणयेति यावत्, इति वा । तत्पूजार्थं तत्प्रेरणैव साधनमिति भावः । 'धृ'धातोः 'ड' प्रत्ययः ।

५) "विः पक्षिपरमात्मनोः" इति च । विना गरुडेन ध्रियते इति विधः स चासौ अनश्च विधानः गरुडवाहनः सर्वचेष्टकः रामचन्द्रः तस्मात् तत्प्रेरणयेति वा । स्वभक्तोत्तमं पूजयितुं स एव प्रेरयति हि ।

६) चस्य गुणसमुच्चयरूपस्य भगवतो विधानतः आज्ञयेति वा ।

७) चं गुणसमुच्चयरूपं भगवन्तं वान्ति जानन्ति इति चवयः भगवद्गुणोत्कर्षज्ञानिनः तेषां धानं निधानं स्थापनं तस्मात् । पूजार्थं ज्ञानिनः व्यवस्थाप्येति यावत् । ल्यब्लोपनिमित्ता पञ्चमी ।

८) चवयः ज्ञानिनः तेषां धानं सन्निधानं तस्मात् सन्निधानमनुसृत्य । सन्निधाने सतीति यावत् । तेषु पारयणादिकं विदधत्सु सत्सु इति भावः ।

त्रिवारं यः पठेन्नित्यं स्तोत्रं भक्त्या द्विजोत्तमः ।
वाञ्छितं लभतेऽभीष्टं षण्मासाभ्यन्तरे खलु ।।६।।

यः=देवपूजासत्समागमदानादिसत्कर्मकर्ता यः पुरुषः । इत्यौणादिक ''अदि''प्रत्ययान्तयजिधातुनिष्पन्नः खल्वयं यच्छब्दः । यजिश्च देवपूजासङ्गतिकरणदानेषु प्रसिद्धः । उपलक्षणत्वाच्चार्थकथनस्यान्येऽपि योग्या अर्था ग्राह्याः । रूढ्याप्यर्थो ग्राह्यः ।

## त्रिवारम्

१) त्रिभिः विष्णुलक्ष्मीवायुभिः व्रियते प्रतिपादकतासम्बन्धेनेति त्रिवारम् । वृञ् धातोः ''अकर्तरि च'' इति कर्मणि घञि रूपम् ।

२) त्रिभिः ज्ञानभक्तिवैराग्यैः व्रियते स्वपूर्वकत्वेन स्वीक्रियत इति वा त्रिवारम् । अत्रार्थे भक्त्येत्यस्य द्विजोत्तम इत्यनेनान्वयः ।

३) मानसार्थानुसन्धानवाचिकोच्चारणदैहिकनमस्कारप्रदक्षिणादिभिः त्रिभिः व्रियते स्वसमानकालिकत्वेनेति वा त्रिवारम् ।

४) विष्णुसर्वोत्तमत्वज्ञानविष्णुप्रेरकत्वानुसन्धानविष्णुप्रीत्युद्देश्यकत्वैः त्रिभिर्व्रियत इति वा ।

५) वायुजीवोत्तमत्वज्ञानवायुप्रेरकत्वानुसन्धानवायुप्रीत्युद्देश्यकत्वैः त्रिभिर्व्रियत इति वा ।

६) व्यासराजरूपर्षिहनूमद्रूपदेवतानुष्टुब्रूप्छन्दोज्ञानैस्त्रिभिर्व्रियत इति वा ।

७) बलित्थासूक्त-सुन्दरकाण्डनिर्णय-वायुस्तुतिरूपैः त्रिभिः स्वपूर्वत्वेन, व्रियत इति वा । पुरश्चरणवेलायां तत्पुरःसरमेव पठनसम्प्रदायात् ।

## द्विजोत्तमः

१) द्विजोत्तमः – ब्राह्मणोत्तमः ।

२) द्विजाः दन्ता उत्तमा यस्य स तथा । दन्तसौष्ठवाभावे सम्यगुच्चारणभावात् । अदन्तैर्वृद्धैर्न वक्तव्यमिति न । वर्णव्यत्यासो यथा न स्यात् तथा अवधानेन वक्तव्यम् । मनसा वा पठनीयम् ।

३) भक्त्याद्विजोत्तम इत्यत्र अद्विजोत्तम इत्यपि पदविभागः सम्भवति । अत्तीति अत् रुद्रः, विः गरुडः, जः देहयोगरूप-जनिमज्जीवाभिमानित्वात् ,जन्यपौरुषेयग्रन्थाभिमानित्वाच्च शेषः अद्विजाः, उत्तमाः यस्य भक्तवर्गस्य सः अद्विजोत्तमः । गरुडशेषरुद्रादि-सर्वभक्तानामपि वायुस्तवनेन मरुदनुग्रहो भवतीति सिद्ध्यति । ननु व्यासराजकृतं स्तोत्रं गरुडादयः कुतः पठन्तीति न वक्तव्यम् । अस्मदादिमनआद्यभिमानितया त एव खलु मुख्यतः पठनकर्तारः ।

४) द्विजः गरुडः तदभिमन्यमानो वेदः तज्ज्ञानमिति यावत्, उत्तमः यस्मिन् सः । महालाभश्चेदपेक्षितो वेदज्ञानमावश्यकमिति दर्शयन्ति ।

## वाञ्छितं लभतेऽभीष्टम्

१) वाञ्छितं अपेक्षितं अभीष्टं लभते । अभि भयरहितं इष्टं अभीष्टम् । वाञ्छितप्राप्तिरेव कदाचिद् भवति परन्तु तया साकं भयमपि प्राप्नोति । वायोरनुग्रहेण यल्लभ्यते वाञ्छितं तत्तु भयरहितेष्टं सल्लभ्यते इति भावः । अवश्यं चैतदेवं विज्ञेयमन्यथा पौनरुक्त्यापत्तेः ।

२) यद्वा वाञ्छितं स्वेन स्तोत्रपाठकेन अपेक्षितं स्तोत्रपाठकः स लभते । भिक्षां देहीत्युक्ते मह्यमिति यथा अनुक्तमपि सिद्ध्यति, तथा त्रिवारं यः पठेत् तेन वाञ्छितमिति अकथितमपि सेत्स्यति ।

३) न केवलमेतावत्, किन्तु अभीष्टमपि स लभते । अभीष्टं नाम अभितः सर्वैः इष्टं यत्तत् । कानिचिद्वस्तूनि सर्वेषामपीष्टानि भवन्ति । यथा अन्नवस्त्रादीनि आयुरारोग्यादीनि । कानिचित् केवलं तस्य तस्य पुरुषस्य अपेक्षितानि भवन्ति । यथा तत्तदारब्धकार्य-परिसमाप्त्यादीनि तदुभयमपि लभत इति भावः ।

४) अथवा वाञ्छितं लौकिकं इष्टं अभीष्टं भयरहितेष्टं मोक्षरूपम् । शास्त्रेषु अभयशब्देन मोक्षस्य व्यपदेशात् ।

५) अथवा न विद्यते भीर्येषां ते अभियः वाय्वादयः तेषा-मेकान्तिनामिष्टं भगवद्रूपमभीष्टं तल्लभते । भगवत्सेवां, भगवद्ध्यानयोगं लभते इति भावः । एवमेव मोक्षं लभते इत्यस्य मोक्षमार्गं लभते इत्यर्थः । तेन षण्मासाभ्यन्तरे मोक्षस्य वा भगवतो वा कथं प्राप्तिरिति शङ्कानवकाशः ।

यद्वा, यादृशतादृशं लौकिकं वाञ्छित्वा स्तोत्रं पठ्यते चेदपि वायुना वा विष्णुना वा दीयते । परन्तु न तयोस्तददतितरामिष्टं भवति । ''यस्त आशिष आशास्ते न स भृत्यः स वै वणिक्'' (भाग.७.१०.५) इति प्रह्लादराजोक्तदिशा लौकिकमाशासानः वणिग्भावं भजते । अतो वणिग्भावोद्भावकाशंसनगोचरलौकिकार्थलाभो नात्र प्राधान्येन विवक्षितः । किन्तु ज्ञानभक्तिविरक्तिलाभ एव ।

६) तथाच अभियौ भयरहितौ विष्णुवायू तयोरिष्टं यथा स्यात्तथा वाञ्छितं लभते । ज्ञानभक्तिविरक्तिविष्णुप्रीत्यादिकं लभत इति भावः ।

७) अथवा भयरहितो मोक्ष अभीः अभ्यर्थं मोक्षार्थमिष्टं समपेक्षित-मपरोक्षज्ञानं लभते । अस्मिन् पक्षेऽपि ज्ञानसाधनश्रवणादिलाभो

वा विवक्षणीयः । षण्मासाभ्यन्तरे इत्यस्य वक्ष्यमाणरीत्या अर्थो वा ज्ञातव्यः ।

८) षण्मासाभ्यन्तरे षण्णां मासानामभ्यन्तरे मध्ये वाञ्छितं अभीष्टं लभते इत्यन्वयः ।

९) अथवा षड्गुणरूपत्वात् षट्, मासनियामकत्वान्मासः, मारूपत्वात् ज्ञानरूपत्वात् मा, साररूपत्वात् सः, षट् चासौ मासश्चेति वा षट्चासौ मा चासौ सश्चेति षण्मासः विष्णुः । तस्मिन् आभ्यन्तरं अन्तःकरणं मनः तस्मिन् षण्मासाभ्यन्तरे । वाय्वन्तर्यामिणि सर्वोत्तमे हरौ मनो लग्नं चेदेव अभीष्टप्राप्तिर्नान्यथेति भावः । षड्गुणरूपत्वमारूपत्वयोः कथनं कुरुपाण्डवन्यायेन ।

१०) अथवा षण्मासाः असाधारण्येन व्यपदेशा भवन्तीति न्यायेन उत्तरायणघटकषण्मासा गृह्यन्ते । ते अभ्यन्तरे मध्ये यस्य सः षण्मासाभ्यन्तरः अर्चिरादिमार्गः तस्मिन् अर्चिरादिमार्गे ''अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ।। (गीता.८.२४) अभीष्टं सन्मानादिकं लभते । अन्ततो अर्चिरादिमार्गे गम्यमभीष्टं भगवद्रूपं लभते श्रवणमनननिदिध्यासनापरोक्षज्ञानभगवत्प्रसादद्वारा लभते निष्कामभक्तश्चेत् । अत्र पक्षे षट्सु मासेषु कथं लभते इति शङ्का नास्ति । षण्मासाभ्यन्तरे इत्यस्य अन्यथा व्याख्यानात् ।

११) सकामभक्तश्चेत् षण्मासाभ्यन्तरे धूमादिमार्गे वाञ्छितं स्वर्गादिकं लभते । ''धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ।। (गीता.८.२५)

१२) अथवा षण्मासाः उत्तरायणगताः तदभिमानित्वात् तच्छब्दवाच्यः प्राणः । तथा षण्मासा दक्षिणायनगताः तदभिमानित्वात् तच्छब्दवाच्या रयिः भारती । षण्मासाश्च षण्मासाश्च षण्मासाः रयिप्राणौ, तयोः लग्नमाभ्यन्तरं षण्मासाभ्यन्तरम् तस्मिन् सति अभीष्टं लभते ।

तथा च मिलित्वा भारतीरमणप्राणान्तर्गतविष्णौ मनः संलग्नं चेदेव अभीष्टं लभते । यादृशतादृशवाञ्छितं अन्यथापि सामान्य-श्रद्धयापि लभेत नाम । परन्तु अभीष्टं निरुक्तं तु भारतीरमणमुख्य-प्राणान्तर्गतविष्णौ मनः संलग्नं चेदेवेति भावः । खलु निश्चितमेतत् ।

१३) अथवा षण्णां कामक्रोधादीनां मा अभावः, ‘‘अमानोनाः प्रतिषेधे’’ । सा भारती छान्दोग्यभाष्ये ‘‘साररूपत्वात् सा भारती’’ इत्युक्तेः । तदभिमन्यमानगुरुभक्त्यादिगुणाः लक्षणया गृह्यन्ते । सायुक्तं गुरुभक्त्यादियुक्तं आभ्यन्तरं साभ्यन्तरम् । षण्मायुक्तं साभ्यन्तरं षण्मासाभ्यन्तरम् । तस्मिन् सत्येव अभीष्टं लभते । तदेव विवृणोति पुत्रार्थी पुत्रं लभते ।

**पुत्रार्थी लभते पुत्रं यशोऽर्थी लभते यशः ।**
**विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ॥**

## पुत्रार्थी लभते पुत्रम्

१) पुत्रकामः स्तोत्रं भक्त्या पठति चेत् पुत्रं लभते । ननु षण्मासाभ्यन्तरे पुत्रलाभः कथम्? नवमासाः खलु अनिवार्यतया अपेक्षिता इति चेत् सत्यम्, तथापि पुत्रोत्पादसूचनं लभते इति भावः । गर्भधारणोत्तरं मासत्रयानन्तरं स्तोत्रं पठति चेत्

तदिच्छानुसारेण पुत्रप्रसवः सुखप्रसवः षण्मासाभ्यन्तरे भवति । गर्भपातादिकं न भवतीति भावः ।

२) अथवा, पुत्रार्थी पुत्रनिवृत्त्यर्थी । पुत्रपदेन लक्षणया पुत्रोत्पादादिरूपसंसारो ज्ञाप्यते । तन्निवृत्यर्थी लभतेऽपुत्रं भावप्रधानो निर्देशः अपुत्रत्वं संसारनिवृत्तिं लभते । ''अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु'' इत्यमरः । पुत्रस्य अर्थः निवृत्तिः अर्थः प्रयोजनं अस्य इति पुत्रार्थी । एकस्यार्थशब्दस्यादर्शनम् ।

३) अथवा पुन्नामनरकात् त्रायत इति पुत्रः नारायणः । स एव हि नरकादस्मान् रक्षति । तदर्थी तत्प्राप्त्यर्थी पुत्रं नारायणं लभते ।

## यशोऽर्थी लभते यशः

१) यशोर्थी लभते यशः यशस्कामः स्तोत्रं जपति यः सः यशः ''दिक्षु यानाद् यशो व्याप्तं'' इत्युक्तरीत्या सर्वदिक्षु व्याप्तं यशः लभते ।

२) निरुक्तरीत्या यशोर्थी साधनप्रतिबन्धकयशोनिवृत्यर्थी अयशः साधनप्रतिबन्धकयशोऽभावं लभते । यद्वा यशोर्थी यः ज्ञानरूपी शाः सुखरूपी यश्चासौ शाश्च यशाः ज्ञानानन्दरूपी विष्णुः वायुर्वा स्वस्वरूपं वा तल्लभते । स्वस्वरूपं लभत इत्यस्य स्वरूपाविर्भावं लभत इत्यर्थः । अकारारन्तशशब्दवत् सकारान्तशस्शब्दोऽपि सुखवाचीति स्वीकृत्य व्याख्यातम् । ''नभं तु नभसा सह'' इतिवत् ।

## विद्यार्थी लभते विद्याम्

१) विद्याकामः ''सा विद्या या विमुक्तये'' इति भागवतोक्तप्रकारेण मोक्षसाधनकामः विद्यां भगवदपरोक्षज्ञानं लभते ।

२) अथवा ''सा विद्या तन्मतिर्यया'' इत्युक्तरीत्या ज्ञानसाधन-सूत्रवेदादिशास्त्राध्ययनकामः विद्यां शास्त्राध्ययनसौभाग्यं लभते ।

३) यद्वा विद्यार्थी लौकिकविद्याया मोक्षविरोधिविद्यात्वात् तन्निवृत्तिकामः अविद्यां मोक्षविरोधिविद्याभावं लभते । अभावार्थे अव्ययीभावाभावः, विरोधिविद्याव्ययस्य सूचनार्थम् ।

४) अथवा विद्यार्थी विद्यास्वरूपस्य भगवतः वायोः भारत्याः उमायाः वा ज्ञानस्य अनुग्रहस्य वा अपेक्षावान् विद्यां विष्णुवायु-भारतीपार्वतीज्ञानं तदनुग्रहं वा लभते ।

## धनार्थी लभते धनम्

१) धनकामः स्तोत्रं पठेद्यः स धनं लभते भगवदपरोक्षज्ञानसाधन-सम्पदं लभते । ''लक्ष्मीं नः कलयेज्जयी सुकृतमध्यक्षीकृतक्षोभणाम्'' इत्युक्तरीत्या ज्ञातव्यम् । ''धनं हि धर्मैकफलं'' इत्युक्तदिशा । ''युद्धं महाधनं त्वर्भं प्रसिद्धं धनमेव हि'' इति ऋग्भाष्यवचनानुगुणं धनार्थी युद्धरूपधनार्थी क्षत्रियः विजयोपेतः, जयोपेतवाग्युद्धरूपधनार्थी ब्राह्मणः तादृग्धनं लभते । इत्यपि अर्थो ज्ञातुं शक्यः । धर्मसाधनभूतं धनं वा लभते ।

२) धनार्थी धर्ममोक्षविरोधिधननिवृत्यर्थी अधनं अधनत्वं तादृग्धनाभावं लभते ।

**सर्वथा माऽस्तु सन्देहो हरिः साक्षी जगत्पतिः ।**
**यः करोत्यत्र सन्देहं स याति नरकं ध्रुवम् ।।८।।**

सर्वथा सर्वेण प्रकारेण केनापि प्रकारेणेति यावत् । सन्देहः माऽस्तु । मायं न माङ् । वायोः सामर्थ्यं अस्ति न वा, अस्ति

चेत् सर्वेषां फललाभः कुतो न जातः । नास्ति चेत् मम कथं लाभो भविता इति सन्देहो मास्तु । भक्त्यादिवैगुण्यनिमित्तः केषांचित् फलालाभः, केषांचित् प्रबलप्रारब्धप्रतिबन्धनिमित्तः । न तु शक्त्यभावनिमित्तः ।

वैदिकमन्त्रपठनेन भवति फललाभः । पौरुषेयस्तोत्रपठनेन कथं भवति इत्यपि संशयो मास्तु ।"वैदिकतान्त्रिकैश्च" इति भागवते (८.६.९) वैदिकैस्तान्त्रिकैरपि" इति महाभारततात्पर्यनिर्णये च (२२.८६) पौरुषेयग्रन्थपठनेनापि फललाभस्य प्रतिपादनात् ।

## हरिः साक्षी जगत्पतिः

जगत् वायुः तत्पतिः जगत्पतिः स्तावकसर्वजगत्पतिः इष्टजगतः इष्टसम्पादनघटकसर्वजगतः पतिः हरिः अत्र वायुस्तवनेन सर्वेष्टप्राप्तिरूपे अर्थे साक्षी साक्षाद्द्रष्टा ।

## यः करोत्यत्र सन्देहं स याति नरकं ध्रुवम्

१) अत्र विषये यः सन्देहं करोति स नरकं ध्रुवं याति ।

२) यः अत्र स्तोत्रपठनविषये सन्देहं सं परमात्मानं ददातीति सन्दा, सन्दा ईहा चेष्टा यस्मिन् कर्मणि यथा स्यात् तथा । सन्देहं करोति प्रवर्तते । भगवत्प्राप्तिर्यथा स्यात् तथा भक्त्या श्रद्धया वेदादि-शास्त्रोक्तरीत्या कर्म कुर्वाणः स्तोत्रं पठतीति यावत्। सः नरकं नराणां जीवानां कं सुखं यस्मात् तं वायुं विष्णुं वा ध्रुवं निश्चयेन याति ।

३) न रकमिति पदच्छेदः । यः अत्र सन्देहं न करोति स ध्रुवं शाश्वतं रकं रः रमणं क्रीडा तद्युक्तं कं सुखं याति प्राप्नोति ।

